# संक्षेपामरकोषः

## 01. परिभाषा

प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित्
स्त्रीपुंनपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित् १
( भेदाख्यानाय न द्वन्द्वो नैकशेषो न संकरः
कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते )[1] +
त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति
निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक् २
इति परिभाषा

## 02. स्वर्गवर्गः

स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः
सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम् ३
अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः
सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः ४
आदितेया दिविषदो गीर्वाणा दानवारयः

[1] परिभाषात्यागः अयुक्तः इति धिया पुनर्योजितः श्लोकोऽयम्

वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम् ५
विद्याधराप्सरोयक्षरक्षोगन्धर्वकिन्नराः
पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ६
आदित्या द्वादश प्रोक्ता विश्वेदेवास्त्रयोदश
वसवश्चाष्ट सङ्ख्याता रुद्रा एकादश स्मृताः *
असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः
शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः ७
ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः
हिरण्यगर्भो लोकेशः स्वयंभूश्चतुराननः ८
धाताब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः
स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड्विधिः ९
पीताम्बरोऽच्युतः शार्ङ्गी गोविन्दो गरुडध्वजः

*( उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः* [2] *
*पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः*
*देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः* *
*वनमाली बलिध्वंसी कंसारातिरधोक्षजः*
*विश्वम्भरः कैटभजिद्विधुः श्रीवत्सलाञ्छनः* *

[2] अमरसारसंस्करणे दृश्यमानाः एते खिलश्लोकाः अनावश्यकाः इति भाति

*जलशायी विश्वरूपो मुकुन्दो मुरमर्दनः*

*वसुदेवोऽस्य जनकः स एवानकदुन्दुभिः* *

*रेवतीरमणो रामः बलदेवो हलायुधः*

*नीलाम्बरः सीरपाणिर्बलश्च मुसली हली )* *

मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः

कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः १०

शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः

पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः ११

लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया

इन्दिरा लोकमाता मा क्षीरोदतनया रमा १२

*( शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनः*

*कौमोदकी गदा खड्गो नन्दकः कौस्तुभो मणिः*

*चापः शार्ङ्गं मुरारेस्तु श्रीवत्सो लाञ्छनं स्मृतम् )* *

शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः

ईश्वरः शर्व ईशानः शङ्करश्चन्द्रशेखरः १३

भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः

मृत्युञ्जयः कृत्तिवासाः पिनाकी प्रमथाधिपः १४

वृषध्वजोऽष्टमूर्तिश्च धूर्जटिश्च त्रिलोचनः

हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः १५

गङ्गाधरश्च श्रीकण्ठः स्थानू रुद्र उमापतिः

उमा कात्यायनी गौरी काली हैमवतीश्वरी

अपर्णा पार्वती दुर्गा गिरिजा चण्डिकाम्बिका १६

विनायको विघ्नराजद्वैमातुरगणाधिपाः [3]

अप्येकदन्तहेरम्बलम्बोदरगजाननाः १७

षाण्मातुरः कार्तिकेयः शरजन्मा षडाननः

पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः १८

इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः

शक्रः पुरन्दरो वज्री वासवो वृत्रहा वृषा १९

आखण्डलः सहस्राक्षस्तुराषाण्मेघवाहनः

*( पुरुहूतः सुरपतिर्बलारातिः शचीपतिः* *

*पुलोमजा शचीन्द्राणि नगरी त्वमरावती*

*हय उच्चैःश्रवा सूतो मातलिर्नन्दनं वनम्* *

*ऐरावतोऽभ्रमातङ्गो जयन्तः पाकशासनिः*

*व्योमयानं विमानोऽस्त्री स्ववैद्यावश्विनीसुतौ*

*उर्वशी मेनका रम्भेत्याद्या अप्सरसो दिवि* *

---

[3] अथैकदन्त ० गजाननाः । विनायको ० गणाधिपाः -- इति अमरसारः । अत्र निरणयसागरमुद्रणालयस्य अमरकोषपाठः स्वीकृतः।

*कुलिशं वज्रमस्त्री स्यात् पविः पुंस्यशनिर्द्वयोः )*

मन्दाकिनी वियद्गङ्गा पीयूषममृतं सुधा २०

अग्निर्वैश्वानरो वह्निः कृशानुः पावकोऽनलः

रोहिताश्वो वायुसखो हुतभुग्दहनः शिखी २१

तनूनपाज्जातवेदा ज्वलनो हव्यवाहनः

वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्

त्रिषु स्फुलिङ्गोऽग्निकणः संतापः संज्वरः समौ २२

उल्का स्यान्निर्गतज्वाला भूतिर्भसितभस्मनी

क्षारो रक्षा च दावस्तु दवो वनहुताशनः

राक्षसः कौणपः क्रव्यात् कर्बुरो यातुरक्षसी २३

कालोऽन्तकः कृतान्तश्च धर्मराजः परेतराट्

यमः पितृपतिश्चौर्वो वाडवो वडवानलः *

प्रचेता वरुणः पाशी यादसांपतिरप्पतिः

अनिलः श्वसनो वायुर्मातरिश्वा सदागतिः २४

समीरमारुतमरुद्गन्धवाहसमीरणाः

नभस्वद्वातपवनपवमानप्रभञ्जनाः २५

प्रकम्पनो महावातो झञ्झावातः सवृष्टिकः

कुबेरः किन्नरेशः स्याद्यक्षराड् गुह्यकेश्वरः २६

मनुष्यधर्मा धनदो राजराजो धनाधिपः

स्यात् किन्नरः किंपुरुषस्तुरङ्गवदनो मयुः २७

निधिर्ना शेवधी रंहस्तरसी तु रयः स्यदः

जवोऽथ शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम् २८

सत्वरं चपलं तूर्णमविलम्बितमाशु च

सततेऽनारताऽश्रान्तसंततविरतानिशम् २९

नित्याऽनवरताऽजस्रमप्यथाऽतिशयो भरः

अतिवेलभृशाऽत्यर्थाऽतिमात्रोद्गाढनिर्भरम् ३०

तीव्रैकान्तनितान्तानि गाढबाढदृढानि च

क्लीबे शीघ्राद्यसत्त्वे स्यात् त्रिष्वेषां सत्त्वगामि यत् ३१

इति स्वर्गवर्गः

## 03. व्योमवर्गः

द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम्

नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम् ३२

वियद् विष्णुपदं वा तु पुंस्याकाशविहायसी

तारापथोऽपि नाकोऽपि द्युरपि स्यात् तदव्ययम् ३३

इति व्योमवर्गः

## 04. दिग्वर्गः

दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः

प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः ३४

उत्तरा दिगुदीची स्याद्दिश्यं तु त्रिषु दिग्भवे

क्लीबाऽव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम्

अभ्यन्तरं त्वन्तरालं चक्रवालं तु मण्डलम् ३५

अभ्रं मेघो वारिवाहो जीमूतोऽपि बलाहकः

धाराधरो जलधरो जलमुग्वारिदो घनः ३६

स्तनितं गर्जितं मेघनिर्घोषे रसितादि च

तडित्सौदामनी विद्युच्चञ्चला च शतह्रदा ३७

इन्द्रायुधं शक्रधनुस्तदेव ऋजु रोहितम्

वृष्टिर्वर्षं तद्विघातेऽवग्राहाऽवग्रहौ समौ ३८

धारासंपात आसारः शीकरोऽम्बुकणाः स्मृताः

वर्षोपलस्तु करका मेघच्छन्नेऽह्नि दुर्दिनम् ३९

अपिधानतिरोधानपिधानाऽऽच्छादनानि च

हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदिनीप्रियः ४०

विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः

अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः ४१

द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः

कला तु षोडशो भागो बिम्बोऽस्त्री मण्डलं त्रिषु *
भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं समेंऽशके
चन्द्रिका कौमुदी ज्योत्स्ना प्रसादस्तु प्रसन्नता ४२
कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्
सुषमा परमा शोभाऽभिख्या कान्तिर्द्युतिश्छविः ४३
अवश्यायस्तुषारश्च प्रालेयं तुहिनं हिमम्
तुषारः शीतलः शीतो हिमोऽपि शिशिरो जडः ४४
नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम्
ध्रुव औत्तानपादिः स्यादगस्त्यः कुम्भसम्भवः ४५
बुधः शुक्रो मही भौमो गुरुः सौरिरिमे ग्रहाः
अङ्गारकः कुजो भौमः समौ सौरिशनैश्चरौ
बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः ४६
शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः
सूरसूर्यार्कमार्तण्डविकर्तनदिवाकराः *
भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः
भास्करस्तरणिः पूषा तपनः सविता रविः ४७
भानुर्मित्रो दिनमणिः सहस्रांशुर्विभावसुः
इनश्चण्डांशुरादित्यश्चांशुमाल्यब्जिनीपतिः *
सूरसूतोऽरुणोनूरुः काश्यपिर्गरुडाग्रजः

परिवेषस्तु परिधिरुपसूर्यकमण्डले ४८

किरणोस्त्रमयूखांशुगभस्तिघृणिरश्मयः

भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् ४९

स्युः प्रभा रुग्रुचिस्त्विड्भा भाश्छविद्युतिदीप्तयः

रोचिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपः ५०

कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति

तिग्मं तीक्ष्णं खरं तद्वन्मृगतृष्णा मरीचिका ५१

इति दिग्वर्गः

## 05. कालवर्गः

कालो दिष्टोऽप्यनेहाऽपि समयोऽपि च पुंसि ते

घस्त्रो दिनाऽहनी वा तु क्लीबे दिवसवासरौ ५२

प्रत्यूषोऽहर्मुखं कल्यमुशःप्रत्युषसी अपि

प्रभातं च दिनान्ते तु सायं सन्ध्या पितृप्रसूः ५३

प्राह्णापराह्णमध्याह्नास्त्रिसन्ध्यमथ शर्वरी

निशा निशीथिनी रात्रिस्त्रियामा क्षनदा क्षपा ५४

विभावरीतमस्विन्यौ रजनी यामिनी तमी

तमिस्त्रा तामसी रात्रिः प्रदोषो रजनीमुखम् ५५

अर्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ

*( पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ* *

*द्वौ द्वौ माघादिमासौ स्यादृतुस्तैरयनं त्रिभिः*

*पूर्णिमा स्यात् पौर्णमासी पूर्णे राका निशाकरे*

*अमावास्या त्वमावस्या दर्शः सूर्येन्दुसङ्गमः )* *

उपरागो ग्रहः पुंसि हेमन्तः शिशोरोऽस्त्रियाम्

वसन्ते पुष्पसमयः सुरभिर्ग्रीष्म ऊष्मकः ५६

निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः

स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत्स्त्रियाम्

संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः ५७

संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि

अस्त्री पङ्कं पुमान् पाप्मा पापं किल्बिषकल्मषम्

कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम् ५८

स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः

मुत्प्रीतिः प्रमदो हर्षमोदानन्दाः सुखं तथा ५९

श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्

शस्तं च भावुकं भव्यं कुशलं क्षेममस्त्रियाम् ६०

दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः

हेतुर्ना कारणं बीजं निदानं त्वादिकारणम् ६१

क्षेत्रज्ञ आत्मा पुरुषः प्रधानं प्रकृतिः स्त्रियाम्

विशेषः कालिकोऽवस्था गुणाः सत्त्वं रजस्तमः *

जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः

प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः ६२

जातिर्जातं च सामान्यं व्यक्तिस्तु पृथगात्मता

चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः ६३

इति कालवर्गः

## 06. धीवर्गः

बुद्धिर्मनीषोपलब्धिर्धीः प्रज्ञा चेतना मतिः

धीर्धारणावती मेधा सङ्कल्पः कर्म मानसम् ६४

चित्ताभोगो मनस्कारश्चर्चा सङ्ख्या विचारणा

अध्याहारस्तर्क ऊहो विचिकित्सा तु संशयः ६५

संदेहद्वापरौ चाथ समौ निर्णयनिश्चयौ

समौ सिद्धान्तराद्धान्तौ भ्रान्तिर्मिथ्यामतिर्भ्रमः ६६

संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः

अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः ६७

मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम्

मोक्षोऽपवर्गोऽथाज्ञानमविद्याऽहंमतिः स्त्रियाम् ६८

रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी

गोचरा इन्द्रियार्थाश्च हृषीकं विषयीन्द्रियम् *

तुवरस्तु कषायोऽस्त्री मधुरो लवणः कटुः

तिक्तोऽम्लश्च रसाः पुंसि तद्वत्सु षडमी त्रिषु ६९

अथामोदः परिमलो सुरभिर्घ्राणतर्पणः

इष्टगन्धः सुगन्धिः स्याद् दुर्गन्धं पूतिगन्धि च ७०

शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः

अवदातः सितो गौरोऽवलक्षो धवलोऽर्जुनः ७१

हरिणः पाण्डुरः पाण्डुर्धूम्रः स्यात् कृष्णलोहिते

कृष्णे नीलासितश्यामकालश्यामलमेचकाः

पीतो गौरो हरिद्राभः पालाशो हरितो हरित् ७२

लोहितो रोहितो रक्तः श्वेतरक्तस्तु पाटलः

अव्यक्तरागस्त्वरुण ईषत्पाण्डुस्तु धूसरः ७३

कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ

चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ७४

इति धीवर्गः

## 07. शब्दवर्गः

ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती

व्याहार उक्तिर्लपितं भाषितं वचनं वचः ७५

अपभ्रंशोऽपशब्दः स्यादोङ्कारप्रणवौ समौ
स्त्रियामृक् सामयजुषी वेदाम्नायौ श्रुतिस्त्रयी
इतिहासः पुराणं च कथा चाख्यायिका पृथक् ७६
आन्वीक्षिकी दण्डनीतिस्तर्कविद्याऽर्थशास्त्रयोः
समाहृतिः सङ्ग्रहश्च किंवदन्ती जनश्रुतिः
वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथाऽह्वयः ७७
आख्याह्वे अभिधानं च नामधेयं च नाम च
हूतिराकारणाऽऽह्वानं शपनं शपथः पुमान् ७८
उपोद्धात उदाहार उपन्यासश्च वाङ्मुखम्
प्रश्नोऽनुयोगः पृच्छा च प्रतिवाक्योत्तरे समे ७९
विवादो व्यवहारः स्यादुच्चैर्घुष्टं तु घोषणा
यशः कीर्तिः समज्ञा च स्तवः स्तोत्रं स्तुतिर्नुतिः [4]
उपालम्भो जुगुप्सा च कुत्सा निन्दा च गर्हणे ८०
आक्षेपस्त्वपवादः स्याद् भर्त्सनं त्वपकारगीः
स्यादाभाषणमालापः प्रलापोऽनर्थकं वचः ८१
अपलापो निह्नवश्च विलापः परिदेवनम्
विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः

[4] समाज्ञा इति अमरसारः

अस्त्री चाटु चटु श्लाघा प्रेम्णा मिथ्याविकत्थनम् ८२

संदेशवाग्वाचिकं स्याद्वितथं त्वनृतं वचः

निष्ठुरं परुषं ग्राम्यमश्लीलं सूनृतं प्रिये ८३

सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति

सोल्लुण्ठनं तु सोत्प्रासं विस्पष्टं प्रकटोदितम् ८४

शब्दे विरावनिर्घोषध्वनिनादरवस्वनाः

मर्मरो वस्त्रपर्णानां भूषणानां तु शिञ्जितम् ८५

कोलाहलः कलकलः कूजितं वाशितं रुतम्

स्त्री प्रतिश्रुत् प्रतिध्वाने गीतं गानमिमे समे ८६

इति शब्दवर्गः

## 08. नाट्यवर्गः

*( निषादर्षभगान्धारषड्जमध्यमधैवताः*

*पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः )* *

विपञ्ची वल्लकी वीणा ध्वनौ तु मधुरास्फुटे

कलो मन्द्रस्तु गम्भीरे तारोऽत्युच्चैस्त्रयस्त्रिषु ८७

वाद्यं वादित्रमातोद्यं मृदङ्गमुरजौ समौ

आनकः पटहोऽस्त्री स्याद् भेरी स्त्री दुन्दुभिः पुमान् ८८

तालः कालक्रियामानं लयः साम्यमथास्त्रियाम्

ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने *

*( भगिनीपतिरावुत्तो भावो विद्वानथावुकः*

*जनको युवराजस्तु कुमारो भर्तृदारकः* *

*राजा भट्टारको देवस्तत्सुता भर्तृदारिका*

*देवी कृताभिषेकायामितरासु तु भट्टिनी* *

*आर्यस्तु मारिष इति राजश्यालस्तु राष्ट्रियः*

*हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति* *

*अब्रह्मण्यमवध्योक्तौ व्यञ्जकाभिनयौ समौ )*

शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः ८९

बीभत्सरौद्रौ च समाः कारुण्यं करुणा घृणा

कृपा दयाऽनुकम्पा स्यादनुक्रोशोऽप्यथो हसः ९०

हासो हास्यं च बीभत्सं विकृतं त्रिष्विदं द्वयम्

विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ भैरवम् ९१

दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्

भयङ्करं प्रतिभयं रौद्रं तूग्रममी त्रिषु *

क्षान्तिस्तितिक्षा भीर्भीतिर्दरस्त्रासश्च साध्वसम्

दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः ९२

गर्वोऽभिमानोऽहङ्कारो व्रीडा लज्जा च ह्रीस्त्रपा

अक्षान्तिरीर्ष्याऽसूया तु दोषारोपो गुणेष्वपि ९३

अनादरः परिभवः परीभावस्तिरस्क्रिया
रीढावमाननावज्ञावहेलनमसूर्क्षणम् *
वैरं विरोधो विद्वेषो मन्युशोकौ तु शुक् स्त्रियाम्
पश्चात्तापोऽनुतापः स्यादुन्मादश्चित्तविभ्रमः ९४
कोपक्रोधामर्षरोषप्रतिघा रुङ्क्रुधौ स्त्रियौ
शुचौ तु चरिते शीलं रोमाञ्चो रोमहर्षणम्
स्नेहः प्रेमाऽस्त्रियां हार्दं प्रियता चाथ दोहदम् ९५
इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः
कामोऽभिलाषस्तर्षोऽथ पुंस्याधिमानसी व्यथा ९६
स्याच्चिन्ता स्मृतिराध्यानमुत्कण्ठोत्कलिके समे
उत्साहोऽध्यवसायः स्यात् प्रमादोऽनवधानता ९७
कपटोऽस्त्री व्याजदम्भौ शाठ्यं छद्म च कैतवम्
घर्मो निदाघः स्वेदः स्यात् कौतुकं तु कुतूहलम् ९८
द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च
व्याजोऽपदेशो लक्ष्यं च त्वरा संवेगसंभ्रमौ ९९
क्रन्दितं रुदितं क्रुष्टं जृम्भस्तु त्रिषु जृम्भणम्
विप्रलम्भो विसंवादो रिङ्गणं स्खलनं समे
स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि १००
स्वरूपं च स्वभावश्च निसर्गः प्रकृतिः स्त्रियाम्

कम्पो वेपथुरुद्धर्षौ मह उद्धव उत्सवः १०१

इति नाट्यवर्गः

## 09. पातालभोगिवर्गः

अधोभुवनपातालं नागलोको रसातलम्

गर्तस्तु रन्ध्रं कुहरं श्वभ्रं च विवरं बिलम् १०२

अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः

ध्वान्ते गाढेऽन्धतमसं विष्वक् संतमसं तमः १०३

वासुकिः सर्पराट् शेषोऽनन्तोऽथाजगरः शयुः

सर्पो भुजङ्गो भुजगो नाग आशीविषः फणी

दर्वीकरो विरसनो व्यालश्चक्षुःश्रवा अहिः १०४

उरगः पन्नगो भोगी जिह्मगः पवनाशनः

अहेः शरीरं भोगः स्यात् स्फटायां तु फणा द्वयोः १०५

समौ कञ्चुकनिर्मोकौ क्ष्वेडस्तु गरलं विषम्

विषवैद्यो जाङ्गुलिको व्यालग्राह्यहितुण्डिकः १०६

इति पातालभोगिवर्गः

## 10. नरकवर्गः

नरको निरयश्चाथ यातना तीव्रवेदना

पीडा बाधा व्यथा दुःखकृच्छ्रकष्टानि त्रिष्वपि १०७

इति नरकवर्गः

## 11. वारिवर्गः

समुद्रः सागरः सिन्धुः पारावारः सरित्पतिः

उदन्वानब्धिरुदधिस्तथा रत्नाकरोऽर्णवः १०८

आपः स्त्री भूम्नि वार्वारि सलिलं जीवनं जलम्

अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुपुष्करम् १०९

उदकं च पयः पाथस्त्रिषु द्वे आप्यमम्मयम्

भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु ११०

महत्सूल्लोलकल्लोलौ स्यादावर्तोऽम्भसां भ्रमः

पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम् १११

तीरं रोधस्तटं कूलं तीरयोः पात्रमन्तरम्

तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम् ११२

जलोच्छ्वासाः परीवाहाः पङ्के जम्बालकर्दमौ

उडुपं तु प्लवः पोतः स्त्रियां नौस्तरणिस्तरिः ११३

नाव्यं त्रिलिङ्गं नौतार्ये कर्णधारस्तु नाविकः

नौकादण्डः क्षेपणी स्यादरित्रं केनिपातकः *

सांयात्रिकः पोतवणिक्कूपको गुणवृक्षकः

त्रिष्वागाधात् प्रसन्नोऽच्छः कलुषोऽनच्छ आविलः

निम्नं गभीरं गम्भीरं गाधोत्तानं विपर्यये ११४

अगाधमतलस्पर्शौ कैवर्तौ दाशधीवरौ

अथ मत्स्यो झषो मीनो यादांसि जलजन्तवः ११५

स्यात्कुलीरः कर्कटकः कूर्मे कमठकच्छपौ

नक्रो ग्राहः स्त्रियां शुक्तिः शङ्खः स्यात् कम्बुरस्त्रियौ ११६

भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः

जलाशया जलाधारास्तत्रागाधजलो ह्रदः ११७

पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः

वेशन्तः पल्वलं चाल्पसरो वापी तु दीर्घिका ११८

पुंस्येवान्धुः प्रहिः कूप उदपानं च पुंसि वा

खेयं तु परिखाऽऽवाप आलवालं नदी सरित्

तरङ्गिणी शैवलिनी तटिनी निम्नगाऽऽपगा ११९

भागीरथी त्रिपथगा त्रिस्रोता जाह्नवी तथा

कालिन्दी सूर्यतनया यमुना शमनस्वसा

कृत्रिमाऽल्पा सरित्कुल्या संभेदः सिन्धुसङ्गमः १२०

स्यादुत्पलं कुवलयमथ नीलाम्बुजन्म च

इन्दीवरं च नीलेऽस्मिन् सिते कुमुदकैरवे १२१

वा पुंसि पद्मं नलिनमरविन्दं सरोरुहम्

पङ्केरुहं तामरसं शतपत्रं कुशेशयम् १२२
कमलं चापि राजीवपुष्कराम्भोरुहाणि च
पुण्डरीकं कोकनदं शैवालं शैवलोऽपि तत् १२३
मृणालं तु बिसं नालमस्त्री किञ्जल्ककेसरौ
कुमुद्वती कुमुदिनी नलिन्यां पद्मिनीमुखाः १२४
इति वारिवर्गः

## 12. भूमिवर्गः

भूर्भूमिः पृथिवी क्षोणी रसा विश्वंभरा क्षितिः
धरा धरित्री धरणिः क्ष्माऽवनिर्मेदिनी मही
वसुन्धरोर्वी वसुधा जगती सागराम्बरा १२५
मृन्मृत्तिका चोर्वरा तु सस्याढ्याऽथोषरेतरा
त्रिष्वथो जगती लोको विष्टपं भुवनं जगत् १२६
नीवृज्जनपदो देशविषयौ तूपवर्तनम्
सुराज्ञि देशे राजन्वान् स्यात्ततोऽन्यत्र राजवान् १२७
शाद्वलः शादहरिते सजम्बाले तु पङ्किलः
गोष्ठं गोस्थानकं चैव वल्मीकं पुंनपुंसकम् *
पर्यन्तभूः परिसरः सेतुरालौ स्त्रियां पुमान्
अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः १२८

सरणिः पद्धती रथ्या शृङ्गाटकचतुष्पथे

दुर्गमं वर्त्म कान्तारं विपथः कापथः समौ १२९

गव्यूतिः स्त्री क्रोशयुगं सुपन्थास्त्वपि सत्पथः

द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी

इति भूमिवर्गः

## 13. पुरवर्गः

पूः स्त्री पुरीनगर्यौ वा स्थानीयं पत्तनं तथा १३०

आपणस्तु विषद्यायां विपणिः पण्यवीथिका

वप्रं चयोऽथ प्राकारो भित्तिः स्त्री कुड्यमेव च १३१

गृहं गेहं च सदनं भवनागारमन्दिरम्

निकेतनं वेश्म सद्म निशान्तं निलयालयौ १३२

वासः कुटी सभा शाला पर्णशालोटजोऽस्त्रियाम्

गर्भागारं वासगृहं वाजिशाला तु मन्दुरा १३३

मठश्छात्रादिनिलयो गञ्जा तु मदिरागृहम्

कुट्टिमोऽस्त्री निबद्धा भूश्चन्द्रशाला शिरोगृहम् *

आवेशनं शिल्पिशाला प्रपा पानीयशालिका

वातायनं गवाक्षोऽथ सौधोऽस्त्री भूपमन्दिरम् १३४

हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम्

अन्तःपुरं तु शुद्धान्तश्चावरोधोऽथ देहली १३५

गोपानसी तु वलभी चत्वरे त्वजिराङ्गने

स्त्री द्वार्द्वारं प्रतीहारः स्याद्वितर्दिस्तु वेदिका १३६

तोरणोऽस्त्री बहिर्द्वारं पुरद्वारं तु गोपुरम्

कपाटमररं तुल्ये तद्विष्कम्भोऽर्गलं न ना

आरोहणं स्यात् सोपानं ग्रामसंवसथौ समौ १३७

संमार्जनी शोधनी स्यात् संकरोऽवकरस्तथा

इति पुरवर्गः

## 14. शैलवर्गः

महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः १३८

अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः

पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषद् १३९

कूटोऽस्त्री शिखरं शृङ्गं प्रपातस्त्वटतो भृगुः

कटकोऽस्त्री नितम्बोऽद्रेः स्नुः प्रस्थः सानुरस्त्रियाम् १४०

धातुर्मनः शिलाद्यद्रेः पादाः प्रत्यन्तपर्वताः

उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः १४१

दरी तु कन्दरो वा स्त्री गह्वरं तु गुहा स्मृता

निकुञ्जकुञ्जौ वा क्लीबे खनिः खानी तथाकरः १४२

उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका

इति शैलवर्गः

## 15. वनौषधिवर्गः

अटव्यरण्यं विपिनं गहनं काननं वनम् १४३

आरामः स्यादुपवनं कृत्रिमं वनमेव यत्

पुमानाक्रीड उद्यानमङ्कुरोऽभिनवोद्भिदि १४४

वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः

वृक्षो महीरुहः शाखी विटपी पादपस्तरुः १४५

अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः [5]

वन्ध्योऽफलोऽवकेशी च फलवान् फलिनः फली

त्रिषु फुल्ले विकसितोन्मीलितौ विकचस्फुटौ १४६

लता तु वल्ली व्रततिः सा वीरुद्या प्रतानिनी

नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः १४७

अस्त्री प्रकाण्डः स्कन्धः स्यात् समे शाखालते तथा

शिरोग्रं शिखरं त्वक् स्त्री वल्कं वल्कलमस्त्रियाम् १४८

ग्रन्थिर्ना पर्वपरुषी स्तम्बगुल्मौ शिफाजटे

काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित् स्त्रियाम्

---

[5] सालः इति पाठान्तरम्

निष्कुहः कोटरं वा ना वल्लरिर्मञ्जरिः स्त्रियौ १४९

पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्

पल्लवोऽस्त्री किसलयं विस्तारो विटपोऽस्त्रियाम् १५०

वृक्षादीनां फलं सस्यं वृन्तं प्रसवबन्धनम्

स्याद्गुच्छकस्तु स्तबकः कुड्मलो मुकुलोऽस्त्रियाम् १५१

स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्

मकरन्दः पुष्परसः परागः सुमनोरजः १५२

कोरकः पुंसि कलिका मन्दारः पारिजातकः

आम्रश्चूतो रसालोऽपि सहकारोऽथ वेतसे १५३

शीतवञ्जुलवानीराः फलाशे पर्णकिंशुकौ

अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता १५४

सुमना मालती जातिः सप्तला नवमालिका

मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च १५५

अस्त्री कुशं कुथो दर्भो वंशे वेणुश्च कीचकः

शष्पं बालतृणं घासो यवसं तृणमर्जुनम् १५६

इति वनौषधिवर्गः

*( अश्वत्थः पिप्पलो बिल्वः श्रीफलोऽथाप्युदुम्बरः*

*आम्बिल्का तिन्तिडी चिञ्चा कर्कन्धूर्बदरी तथा* *

*इङ्गुदी तापसतरुर्भूर्जे चर्भिर्मृदुत्वचौ*

*ताम्बूलवल्ली ताम्बूली नागवल्ल्यथ केसरे* *

*बकुलो वञ्जुलोऽशोके समौ करकदाडिमौ*

*नीपः कदम्बः प्रियको बन्धूको बन्धुजीवकः* *

*अथ शोणे कुरबकस्तथा पीते कुरण्टकः*

*नालिकेरो नारिकेलस्तापिच्छस्तु तमालकः* *

*रसालेक्षू तुम्ब्यलाबू रम्भा तु कदली स्त्रियाम्*

*खदिरो रक्तसारश्च चम्पको हेमपुष्पकः* *

*कुन्दं शिरीषं धत्तूरः केतकी मल्लिका जपा*

*प्रियङ्गुः पूग एरण्डः शमी चामलकी तथा* *

*पलाण्डुर्लशुनो मुस्ता दूर्वा श्यामाक एव च*

*जम्बूः स्त्री पुंसि जम्बीरः कर्कटी शाल्मलिर्द्वयोः* *

*इति वनौषधिवर्गः )*

## 16. सिंहादिवर्गः

शार्दूलद्वीपिनौ व्याघ्रे कण्ठीरवमृगद्विषौ

सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः १५७

कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः

मर्कटो वानरः कीशो वराहः कोलसूकरौ १५८

भल्लूक ऋक्षो महिषे लुलायश्चाथ जम्बुके

श्रृगालो वञ्चकः क्रोष्टा कोकस्त्वीहामृगो वृकः १५९
ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक्
चमूरुकृष्णसारैणकुरङ्गहरिणा मृगे १६०
रुरुसारङ्गपृषता अन्याश्च मृगजातयः
कृमिकीटौ क्षुद्रजन्तौ वृश्चिकः शूककीटकः *
ऊर्णनाभस्तन्तुवाय आखुस्तून्दुरमूषकौ
गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः
पारावतः कलरवः कपोतोऽथ शशादनः १६१
पत्री श्येन उलूकस्तु वायसारातिपेचकौ
दिवान्धः कौशिको घूको दिवाभीतो निशाटनः १६२
कृकवाकुस्ताम्रचूडह् कुक्कुडश्चरणायुधः
चटकः कलविङ्कः स्याद् बलाका बिसकण्ठिका १६३
वनप्रियः परभृतः कोकिलः पिक इत्यपि
काकस्तु बलिभुग् ध्वाङ्क्षो वायसो मौकुलिस्तथा १६४
आतापिचिल्लौ दाक्षाय्यगृध्रौ कीरशुकौ समौ
क्रुङ् क्रौञ्चोऽथ बकः कह्वः पुष्कराह्वस्तु सारसः १६५
कोकश्चक्रश्चक्रवाकः कादम्बः कलहंसकः
हंसभेदो राजहंसो मल्लिकाक्षस्तथाऽपरः १६६
अमौ चातकसारङ्गौ दंशस्तु वनमक्षिका

वरटा त्वपि गन्धोली सरघा मधुमक्षिका
समौ पतङ्गशलभौ खद्योतो ज्योतिरिङ्गणः १६७
मधुव्रतो मधुकरो मधुलिण्मधुपालिनः
द्विरेफपुष्पलिङ्भृङ्गषट्पदभ्रमरालयः १६८
मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्
शिखावलः शिखी केकी मेघनादानुलास्यपि १६९
केका वाणी मयूरस्य समौ चन्द्रकमेचकौ
शिखा चूडा शिखण्डस्तु पिच्छबर्हे नपुंसके १७०
शकुन्तिरण्डजः पक्षी शकुन्तविहगद्विजाः
खगः पत्त्री विहायाश्च विविष्किरपतत्रयः १७१
कारण्डवस्तित्तिरिश्च जीवंजीवश्चकोरकः
पक्षः पत्रं पतत्रं च चञ्चुस्त्रोटिरुभे स्त्रियौ
पेशी कोशो द्विहीनेऽण्डं कुलायो नीडमस्त्रियाम् १७२
पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः
स्त्रीपुंसौ मिथुनं द्वन्द्वं युग्मं तु युगलं युगम् १७३
समूहनिवहस्तोमसंदोहनिकरव्रजाः
समुदायश्च सङ्घातः समवायश्चयो गणः १७४
स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम्
वृन्दभेदाः समैर्वर्गः सङ्घसार्थौ तु जन्तुभिः १७५

सजातीयैः कुलं यूथं तिरश्चां पुंनपुंसकम्

पुञ्जो राशिश्चोत्करश्च कूटं स्यात् पुंनपुंसकम्

गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते १७६

इति सिंहादिवर्गः

## 17. मनुष्यवर्गः

मनुष्या मानुषा मर्त्या मनुजा मानवा नराः

स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः १७७

स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः

प्रतीपदर्शिनी वामा वनिता महिला तथा १७८

विशेषस्त्वङ्गना भीरुः कामिनी वामलोचना

प्रमदा मानिनी कान्ता ललना च नितम्बिनी १७९

सुन्दरी रमणी रामा कोपना सैव भामिनी

वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी १८०

पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी

भार्या जायाऽथ पुं भूम्नि दाराः स्यात्तु कुटुम्बिनी १८१

पुरन्ध्री सुचरित्रा तु सती साध्वी पतिव्रता

कृताभिषेका महिषी कन्या तु स्यात् कुमारिका १८२

पुंश्चला धर्षिणी बन्धक्यसती कुलटेत्वरी

स्वैरिणी पांशुला च स्यात् तरुणी युवतिः समे १८३
रजस्वला पुष्पवती स्याद्रजः पुष्पमार्तवम्
पुनर्भूर्दिदिषूरूढा द्विस्तस्या दिधिषूः पतिः *
समाः स्नुषाजनीवध्वो विश्वस्ता विधवा समे
आलिः सखी वयस्याथ पतिवत्नी सभर्तृका १८४
वृद्धा स्त्री तु पलिक्नी स्याद् दूतीसंचारिके समे
वारस्त्री गणिका वेश्या कुट्टिनी शम्भली समे १८५
आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी
पैतृष्वसेयः स्यात् पैतृष्वस्त्रीयश्च पितृष्वसुः १८६
सुतो मातृष्वसुश्चैवं वैमात्रेयो विमातृजः
आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी १८७
आहुर्दुहितरं सर्वेऽपत्यं तोकं तथा समे
स्वजाते त्वौरसोरस्यौ तातस्तु जनकः पिता १८८
जनयित्री प्रसूर्माता जननी भगिनी स्वसा
ननान्दा तु स्वसा पत्युर्नप्त्री पौत्री सुतात्मजा १८९
भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्
पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः १९०
पितुर्भ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः
श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ १९१

स्वस्रीयो भागिनेयः स्याज्जामाता दुहितुः पतिः
पितामहः पितृपिता तत्पिता प्रपितामहः १९२
मातुर्मातामहाद्येवं सपिण्डाश्च सनाभयः
समानोदर्यसोदर्यसगर्भ्यसहजाः समाः १९३
सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः
धवः प्रियः पतिर्भर्ता जारस्तूपपतिः समौ
भ्रात्रीयो भ्रातृजो भ्रातृभगिन्यौ भातरावुभौ १९४
मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ
श्वश्रूश्वशुरौ श्वशुरौ पुत्रौ पुत्रश्च दुहिता च १९५
दम्पती जम्पती जायापती भार्यापती च तौ
शिशुत्वं शैशवं बाल्यं तारुण्यं यौवनं समे १९६
स्यात् स्थाविरं तु वृद्धत्वं वृद्धसङ्घेऽपि वार्द्धकम्
स्यादुत्तानशयो डिम्भः स्तनपश्च स्तनंधयः *
पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा
बालस्तु स्यान्माणवको वयस्यस्तरुणो युवा १९७
प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि
जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः १९८
पूर्वजस्त्वग्रजोग्रीयो बलवान्मांसलोंसलः
तुन्दिलस्तुन्दिभस्तुन्दी खर्वो ह्रस्वश्च वामनः १९९

कुब्जः पङ्गुः कुणिः खञ्जो बधिरोन्धश्च केकरः
इत्येते विकलाङ्गाः स्युः भिषग्वैद्यो चिकित्सके २००
अनामयं स्यादारोग्यं चिकित्सा रुक्प्रतिक्रिया
भेषजौषधभैषज्यन्यगदो याजुरित्यपि २०१
स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः
क्षयः शोषश्च यक्ष्मा च कासस्तु क्षवथुः पुमान् *
व्रणोऽस्त्रियामरुः क्लीबे पामपासे विचर्चिका
कण्डूः खर्जूश्च कण्डूया विस्फोटः पिटकस्तथा २०२
वार्त्तौ निरामयः कल्यो विखृतव्याधितातुराः
शुक्रं तेजोरेतसी च बीजवीर्यैन्द्रियाणि च २०३
मायुः पित्तं कफः श्लेष्मा स्त्रियां तु त्वगसृग्धरा
सृणिका स्यन्दिनी लाला नाडी तु धमनिः शिरा *
अन्त्रं पुरीतद् गुल्मस्तु प्लीहा पुंस्यथ वस्नसा
स्नायुः स्त्रियां कालखण्डयकृती तु समे इमे २०४
पिशितं तरसं मांसं पललं क्रव्यमामिषम्
रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितम् *
मूत्रं प्रस्त्रावोऽथ विष्ठा पुरीषं शमलं शकृत्
बुक्काप्रमांसं हृदयं हृन्मेदस्तु वपा वसा
स्याच्छरीरास्थि कङ्कालः कपालः स्यात्तु कर्परः २०५

अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम्

गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः *

कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः

वामं शरीरं सव्यं स्यादपसव्यं तु दक्षिणम् २०६

सक्थि क्लीबे पुमानूरुः पदङ्घ्रिश्चरणोऽस्त्रियाम्

जङ्घाऽथ घुटिका जानु कटिः श्रेणिः स्त्रियां समे २०७

पश्चान्नितम्बः श्रीकट्याः क्लीबे तु जघनं पुरः

पिचण्डकुक्षी जठरोदरं तुन्दं स्तनौ कुचौ

चुचुकं तु कुचाग्रं स्यान्न ना क्रोडं भुजान्तरम् २०८

उरो वत्सं च वक्षश्च पृष्ठं तु चरमं तनोः

बाहुमूले उभे कक्षौ पार्श्वमस्त्री तयोरधः २०९

स्कन्धोऽप्यंसोऽवलग्नं द्वे मध्योऽस्त्री मध्यमं तथा

दोर्दोषा च भुजो बाहुः पाणिर्हस्तः करस्तथा २१०

कूर्परोऽथ प्रकोष्ठोऽथ मणिबन्धोऽथ चाङ्गुली

अङ्गुष्ठस्तर्जनीत्याद्यास्ता नखो नखरोऽस्त्रियाम् २११

वितस्तिः स्त्री चपेटो ना मुष्टिः स्त्री चाञ्जलिः पुमान्

कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि २१२

वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्

क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका २१३

ओष्ठाधरौ तु रदनच्छदौ दशनवाससी

अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परो हनुः२१४

रदना दशना दन्ता रदास्तालु तु काकुदम्

रसज्ञा रसना जिह्वा प्रान्तावोष्ठस्य सृक्किणी २१५

ललाटभालेऽथ भ्रूः स्त्री तारकाऽक्ष्णः कनीनिका

लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी २१६

दृग्दृष्टी चास्रु नेत्राम्बु रोदनं चास्रमश्रु च

अपाङ्गौ नेत्रयोरन्त कटाक्षोऽपाङ्गदर्शने २१७

कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणः श्रवः

उत्तमाङ्गः शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् २१८

चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः

शिखण्डकः काकपक्षोऽथालकाश्चूर्णकुन्तलाः २१९

कबरी केशवेशोऽथ धम्मिल्लः संयताः कचाः

शिखा चूडा केशपाती व्रतिनस्तु सटा जटा २२०

पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे

तनूरुहं रोम लोम तद्वृद्धौ श्मश्रु पुंमुखे २२१

आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम्

प्रसाधितो मण्डितश्च भूषितश्च परिष्कृतः २२२

विभ्राड् भ्राजिष्णुरोचिष्णू भूषणं स्यादलङ्क्रिया

अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम् २२३

मण्डनं चाथ मुकुटं किरीटं पुंनपुंसकं

चूडामणिः शिरोरत्नं तरलो हारमध्यगः २२४

कर्णिका तालपत्रं स्यात्कुण्डलं कर्णवेष्टनम्

मुक्तावली तु हारः स्यात् कटको वलयोऽस्त्रियाम्

केयूरमङ्गदं तुल्ये अङ्गुलीयकमूर्मिका २२५

स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा

मञ्जीरो नूपुरोऽस्त्री तु किङ्किणी क्षुद्रघण्टिका २२६

वाल्कं क्षौमादि फालं तु कार्पासं बादरं च तत्

कौशेयं कृमिकोशोत्थं राङ्कवं मृगरोमजम् २२७

तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम्

क्षौमं दुकूलं स्याद् द्वे तु निवीतं प्रावृतं त्रिषु २२८

दैर्घ्यमायास आरोहः परिणाहो विशालता

पटोऽस्त्री वसनं वासश्चैल्वस्त्राम्बरांशुकम् २२९

चोलः कूर्पासकोऽस्त्री स्यात् समौ रल्लककम्बलौ

पटच्चरं जीर्णवस्त्रं समौ नक्तककर्पटौ *

अस्त्री वितानमुल्लोचौ दूष्याद्यं वस्त्रवेश्मनि

प्रतिसीरा जवनिका स्यात् तिरस्करिणी च सा २३०

उत्तरीयं प्रावरणं स्यान्मार्ष्टिमार्जना स्मृजा

अवगाहाप्लवौ स्नानेऽप्यथ चर्चानुलेपनम् *

उद्वर्तनोत्सादने द्वे परिकर्माङ्गसंस्क्रिया

चन्दनोऽस्त्री मलयजो लाक्षाऽलक्तस्तथा जतुः २३१

मृगनाभिर्मृगमदः कस्तूरी चाथ कुङ्कुमम्

घनसारस्तु कर्पूरः क्षोदो ना चूर्णमस्त्रियाम्

वासितं त्रिषु वर्तिस्तु वर्णकं च विलेपनम् २३२

संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम्

माल्यं मालास्रजौ मूर्ध्नि शिखास्वापीडशेखरौ २२३

उपधानं तूपबर्हः शय्यायां शयनीयवत्

शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः २३४

गेन्दुकः कन्दुको दीपः प्रदीपः पीठमासनम्

दर्पणे मुकुरादर्शौ व्यजनं तालवृन्तकम् २३५

प्रसाधनी कङ्कतिकाऽऽभोगस्तु परिपूर्णता

छत्रं तु स्यादातपत्रं संपुटस्तु समुद्गकः

इति मनुष्यवर्गः

## 18. ब्रह्मवर्गः